सोम मङ्गल। बुधगुरुशुक्र शनैश्चरोराहुः। केतुःप्रमुखाखेटा जिनपतिपुरतोवतिष्टंतु ॥९॥ जिननामकृतोच्चारा। देशनक्ष त्रवर्णके। स्तुताश्च पूजिताभक्त्या। ग्रहाःसंतुसुखावहा ॥१०॥ जिनानामग्रतःस्थित्वा। ग्रहाणांतुष्टिहेतवे। नमस्कारशतं भक्त्या। जपेदष्टोत्तरं नरं ॥११॥ भद्रबाहुरुवाचेदं। पंचमः श्रुतकेवली। विद्याप्रवादतःपूर्व्वाद् ग्रहशांतिर्विनिर्मितः ॥ १२॥ इति श्रीनवग्रहशांतिकारकजिनस्तोत्र ॥ ॥ ॥ ॥

॥ ॥ धम्मो मंगलमुक्किट्ठं अहिंसासंजमोतवो। देवा वितंनमंसंति। जस्स धम्मे सयामणो ॥ १ ॥ जहा दुमस्सपुप्फे सु। भमरो आविअइरसं। नय पुप्फंकिलामेइ। सोअपीणेइ अप्पयं ॥ २ ॥ एमे एसमणावुत्ता। जेलोएसंति साहुणो विहंगमाव पुप्फेसु। दाणभत्तेसणेरया ॥ ३ ॥ वयंच वित्तिं लब्भामो। नयकोइउवहम्मई। अहागडेसुरीयंति। पुप्फेसु भमरो जहा ॥ ४ ॥ महुकारसमाबुद्धा। जे भवंति अणिस्सि आ। णाणापिंडरयादंता। तेण वुच्चंति साहुणोत्तिबेमि ॥ ५॥ दुमपुप्फियानामज्झयणंसम्मत्तं ॥ ॥ ॥ ॥

॥ अथ जिनपंजरस्तोत्र लिख्यते ॥

॥ ॥ ॐ ह्रीँ श्रीँ अर्हं अर्हद्भ्योनमोनमः। ॐ ह्रीँ श्रीँ अर्हं सिद्धेभ्योनमोनमः। ॐ ह्रीँ श्रीँ अर्हं आचार्य्येभ्योनमोनमः। ॐ ह्रीँ श्रीँ अर्हं उपाध्यायेभ्यो नमोनमः। ॐ ह्रीँ श्रीँ अर्हं श्री गौतमस्वामि प्रमुख सर्वसाधुभ्योनमोनमः ॥१॥ एषः पंच नमस्कारः। सर्वपापक्षयंकरः। मंगलानांचसर्वेषां। प्रथमं

भवतिमंगलं॥२॥ ॐ ह्रीं श्रीं जएविजए। अर्हं परमात्मनेनमः।
कमलप्रभसूरींद्रो। भाषतेजिनपंजरं ॥ ३ ॥ एकभक्तोपवा
सेन। त्रिकालंय पठेदिदं। मनोभिलषितंसर्वं। फलंसलभ
तेध्रुवं ॥४॥ भूशय्या ब्रह्म चर्येण। क्रोधलोभविवर्जितः। देव
ताग्रेपवित्रात्मा। षरमासैर्लभतेफलं ॥ ५ ॥ अर्हंतंस्थापये
न्मुर्द्धि। सिद्धंचक्षुर्ललाटके। आचार्यंश्रोत्रयोर्मध्ये। उपा
ध्यायंतुघाणके ॥६॥ साधुवृन्दंमुखस्याग्रे। मनःशुद्धंविधा
यच। सूर्यचंद्रनिरोधेन। सुधीःसर्वार्थसिद्धये ॥ ७ ॥ दक्षि
णेमदनद्वेषी। वामपार्श्वेस्थितोजिनः। अंगसंधिषुसर्वज्ञ।
परमेष्ठिशिवंकरः ॥ ८ ॥ पूर्वाशांश्रीजिनोरक्षे। दाग्नेयींवि
जितेंद्रियः। दक्षिणाशांपरंब्रह्म। नैऋतिंचत्रिकालवित्
९ ॥ पश्चिमाशांजगन्नाथो। वायवंपरमेश्वरः। उत्तरांतीर्थ
कृत्सर्वो। मीशानींचनिरंजनः ॥ १० ॥ पातालंभगवानर्हं।
माकाशंपुरुषोत्तमः। रोहिणी प्रमुखादेव्यो। रक्षंतुसकलं
कुलं ॥ ११ ॥ ऋषभोमस्तकंरक्षे। दजितोपिविलोचने।
संभवःकर्णयुगलं। नाशिकांचाभिनंदनः ॥ १२ ॥ ओष्ठौश्री
सुमतोरक्षेत्। दंतान्पद्मप्रभोविभुः। जिह्वांसुपार्श्वदेवोयं।
तालुचंद्रप्रभोविभुः ॥ १३ ॥ कंठंश्रीसुविधीरक्षेत। हृदयं
श्रीसुशीतल। श्रेयांसोबाहुयुगलं। वासुपुज्यः करद्वयं ॥१४॥
अंगुलीविमलोरक्षे। दनंतोसौस्तनावपि। सुधर्मोप्युदरा
स्थीनि। श्रीशांतिर्नाभिमंडलं ॥ १५ ॥ श्रीकुंथुगुंह्यकंरक्षे
द्रोरोमकटीतटं। मल्लिरूरुपृष्टिवंशं। जंघेचमुनिसुव्रतः ॥
१६ ॥ पादांगुलीर्नमीरक्षेत्। श्रीनेमिश्चरणद्वयं। श्रीपार्श्व
नाथःसर्वांगं। वर्द्धमानश्चिदात्मकं ॥ १७ ॥ पृथिवी जलतेज

स्त । वायुराकाशमयंजगत् । रक्षेदशेषपापेभ्यो । वीतरागो निरंजनः ॥ १८ ॥ राजद्वारेश्मशानेवा । संग्रामेशत्रुसंकटे । व्याघ्रचौराग्निसर्पादि । भूतप्रेतभयाश्रिते ॥ १९ ॥ अकाल मरणप्राप्ते । दारिद्र्यापत्समाश्रिते । अपुत्रत्वेमहादोषे । मूर्ख त्वेरोगपीडिते ॥ २० ॥ डाकिनीशाकिनीग्रस्ते । महाग्रह गणार्दिते । नद्युत्तारेध्ववैषम्ये । व्यसनेचापदिस्मरेत् ॥ २१ ॥ प्रातरेवसमुत्थाय । यःस्मरेज्जिनपंजरं । तस्य किंचिद्भयंना स्ति । लभते सुखसंपदं ॥ २२ ॥ जिनपंजरनामेदं । यःस्मर त्यनुवासरं । कमलप्रभराजेंद्रः । श्रियंसलभतेनरः ॥ २३ ॥ प्रातःसमुत्थायपठेत्कृतज्ञो । यस्तोत्रमेतज्जिनपंजराख्यं । आसादयेत्सःकमलप्रभाख्यं । लक्ष्मींमनोवांछितपूरणाय ॥ २४ ॥ श्रीरुद्रपल्लीयवरेण्यगच्छे । देवप्रभाचार्य्यपदाब्जहंसः । वादीन्द्रचूडामणिरेषजैनो । जीयाद्गुरुः श्रीकमलप्रभाख्यः ॥ २५ ॥ इति श्रीजिनपंजरस्तोत्रसंपूर्णम् ॥ ॥ ॥ ॥

॥ अथ लघु जिनसहस्रनाम लिख्यते ॥

॥ ॥ नम स्त्रिलोकनाथाय । सर्वज्ञाय महात्मने । वक्ष्ये तस्यैव नामानि । मोक्षसौख्याभिलाषया ॥ १ ॥ निर्म लः सास्वतो शुद्धः । निर्विकल्पो निरामयः । निःशरीरोनि रातंकः । सिद्धः सूक्ष्मो निरंजनः ॥ २ ॥ निष्कलंको निरा लंबो । निर्मोहो निर्मलोसमः । निर्भयो निरहंकारो । नि र्विकारोथनिष्क्रियः ॥ ३ ॥ निर्दोषोनिरुजःशांतः । निर्भयो निर्ममःशिवः । निस्तरंगो निराकारो । निष्कर्मोनिष्क

लप्रभुः ॥४॥ निर्वाद्रो निरुपज्ञानः। निरागो निरघोजिनः।
निःशब्दःप्रतिमश्लेष्टः। उत्कृष्टो ज्ञानगोचरः ॥ ५॥ निःशं
गात् प्राप्तकैवल्यो नैष्ठकः शब्दवर्जितः। अनिंद्यो महापूता
त्मा। अनतशिखरशेषरः ॥ ६ ॥ निःशब्दो गुण संपन्न।
पापतापप्रणाशनः। सोपियोगात् शुभंप्राप्तः कर्मद्योतिवला
वहः ॥७॥ अजरो अमरः सिद्धः। अचिंतः अक्षयो विभुः।
अमूर्त्तः अच्युतोब्रह्म। विष्णु रीश प्रजापति ॥ ८ ॥ अनिं
द्योविश्वनाथश्च। अणो अनुपमोभवः। अप्रमेयोजगन्नाथ।
बोधरूपो जिनात्मकः ॥ ९ ॥ अव्ययसकलाराध्यो। निष्पन्नो
ज्ञानलोचनः। अछेद्यो निर्मलो नित्यः। सर्वसत्वविवर्जितः
॥ १० ॥ अजेयः सर्वतोभद्रः। निष्कषायो भवांतकः। विश्व
नाथः स्वयंबुद्धः। वीतरागोजिनेश्वरः ॥११॥ अंतको सहजा
नंद। अवाङ्मानसगोचरः। असाध्यशुद्धचैतन्यः। कर्म नोक
र्म वर्जितः ॥ १२ ॥ अनंतविमलज्ञानी। स्पृष्टोस्व निष्प्रका
शकः। कर्माजितो महात्मानः। लोकत्रयशिरोमणिः॥१३॥
अव्याबाधो वरःशंभुः। विश्ववेदी पितामहः। सर्वभूतहि
तोदेव। सर्वलोकसरण्यकः ॥ १४ ॥ आनंदरूपचैतन्यो।
भगवांस्त्रिजगद्गुरुः। अनंतानंतधीशक्तिः। रत्नव्यक्ताव्य
यात्मकः ॥ १५ ॥ अष्टकर्म विनिर्मुक्तः। सप्तधातुविवर्जितः
गौरवादित्रयाद्दूरः। सर्वज्ञानादिसंयुतः ॥ १६ ॥ अभयः
प्राप्तकैवल्यः। निर्माणो निरपेक्षकः। निष्कलंकेवलज्ञानी।
मुक्तिसौख्यप्रदायकः ॥१७॥ अनामयो महाराध्यो। वरदो
ज्ञानपावकः। सर्वेशःसन्मुखावासः। जिनेंद्रोमुनिसंस्तुतः
॥ १८ ॥ अन्यूनफलज्ञानी। विश्वतत्वप्रकाशकः। प्रबुद्धोभ

गवान्नाथः । प्रस्तुतः पुन्यकारकः ॥ १९॥ शंकरः सुगतो रौद्रः सर्वज्ञो मदनांतकः । ईश्वरो भुवनाधीशः । सचित्तः पुरुषोत्तमः ॥२०॥ सद्योजातमहात्मानं । विमुक्तोमुक्तिवल्लभः योगींद्रो नादिसंसिद्धः । निरीहोज्ञानगोचरः ॥ २१॥ सदा शिवांश्चतुर्वक्त्रः । सत्सौख्य त्रिपुरांतकः । त्रिनेत्रः त्रिजगत्पूज्यः । कल्याणकोष्टमूर्त्तिकः ॥ २२॥ सर्वसाधुजनैर्वंद्यः । सर्वपापविवर्जित । सर्वदेवाधिकोदेवः । सर्वभूतहितंकरः ॥ २३ ॥ स्वयंविद्यो महात्मानं । प्रसिद्धः पापनाशनः । तनुमात्रचिदानंद । चैतन्यसैत्यवैभवः ॥ २४ ॥ सकलातिशयोदेव । मुक्तिस्थो महतांमहः । मुक्तिकार्यीयसंतुष्टो । निरागः परमेश्वरः ॥ २५ ॥ महादेवो महावीरो । महामोहविनाशकः । महाभावो महादर्शः । महामुक्तिप्रदायकः ॥ २६ ॥ महाज्ञानी महायोगी । महातपो महात्मकः । महर्द्धिको महावीर्यो । महांतिकपदस्थितः ॥ २७॥ महापूज्यो महावंद्यो । महाविघ्नविनाशकः । महासौख्यो महापुंसो । महामहिम अच्युतः ॥ २८ ॥ मुक्तामुक्तिजसंबोधः । एकानेकवि निश्चलः सर्वबंधविनिर्मुक्तो । सर्वलोकप्रधानकः ॥ २९ ॥ महासूरो महाधीरो । महादुःखविनाशकः । महामुक्ति प्रबोधीरो । महाहृद्यो महागुरुः ॥३०॥ निर्मोरोमारविध्वंसो । निष्कामोविषयाच्युतः । भगवंता महाश्रांतो । शांतिकल्याणकारकः ॥३१॥ परमात्मापरंज्योतिः । परमेष्टी परमेश्वरः । परमात्मापरानंदः । परंपरम आत्मक ॥ ३२॥ प्रस्तुतानंतविज्ञानो । सख्यानिर्वाणसंयुतः । नाकृतिं नाचरोवर्णो । व्योमरूपो जितात्मकः ॥ ३३ ॥ व्यक्ताव्यक्तांजसंबोध । संसा

रत्नेद्रकारणः। निरवद्योमहाराध्यः। कर्मजितधर्मनायकः ॥ ३४ ॥ बोधसत्त्वजगद्वंद्यो। विश्वात्मानरकांतकः। स्वयंभूपापहृत्पूज्यः। पुनीतोविभवःस्तुतः ॥३५॥ वर्णातीतो मलातीत। कृपातीतो निरंजनः। अनंतज्ञानसंपूर्णो। देवदेवेशनायकः ॥३६॥ वरेण्योभवविध्वंसी। योगिनांज्ञानगोचरः। जन्ममृत्युजरातीतः। सर्वविघ्नहरोहरः ॥ ३७ ॥ विश्वदृक्भव्यसंबंद्यः। पवित्रोगुणसागरः। प्रसन्नः परमाराध्यः लोकालोकप्रकाशकः ॥३८॥ रत्नगर्भोजगत्स्वामी। इंद्रवंद्यः सुरर्चितः। निष्प्रपंचो निरातङ्को। निःशेषक्लेशनाशकः ॥३९॥ लोकेशो लोकसंसेव्यो। लोकालोकविलोकनः। लोकोत्तमो त्रिलोकेशो। लोकाग्रशिखरस्थितः ॥ ४०॥ नामाष्टकसहस्राणि। ये पठन्ति पुनः पुनः। ते निर्वाणपदं यांति। मुच्यते नात्र संशयः ॥४१॥ इति श्रीभद्रबाहुस्वामिना विरचितं लघुसहस्रनाम संपूर्णम् ॥ॐ॥

॥ॐ॥सकलमङ्गलकेलिनिवेशनं। सहृदयं हृदयं गमदेशनं। अभिनतोत्तमभक्तसुरेश्वरं। नमतशीतलनाथजिनेश्वरं ॥ १ सकलमन्दरमङ्गलमन्दिरं। विमलकेवलबोधविकस्वरं। अनिमुवर्णसुवर्णसमद्युतं। प्रवरबंधुरलक्षणसंयुतं ।२। युग्मं सदोयभक्तिर्भविनां भवे भवे। भवेदभीष्टार्थनिदानमद्भुतं। स एष नन्दात्मसमुद्भवो जिनः। समर्चनीयः खलुशीतलः प्रभः ।३। कर्माभिततान् भविनः सुशीतलान्। कुर्वन्सुदा ... रूपधरः। सदैव देवो भवतात्सदैव मे। समिष्टसिद्धि जिनराजशीतलः ॥४॥ अधिगतशिवशर्मा वीतमोहादिकर्मा। ... समतः साधुधर्मा। विश्वामनि

तमूर्त्तिः स्फूर्त्तिमत्पुण्यकीर्त्तिः। जयतु गतभवार्त्तिः शीतलःसौम्यमूर्त्तिः ॥५॥ इति श्रीशीतलजिनःस्तोत्रम् ॥*॥

॥*॥विशदगुणविचित्रं सच्चरित्रं दधानो। दलितदुरितराशिर्विश्वविश्वावदातः। प्रकटमहिमरम्यो दुर्मतीनामगम्यो जयतु जिनपतिः श्रीपार्श्वचिन्तामणीशः ॥१॥ कमठकुमतिवल्ली मूलमुन्मूलयन्तौ। पदमकृतपदाब्जे यस्य भृङ्गीवपद्मा अविकृतमतिकायोत्सर्गमुद्रान्वितोसौ। जगतिवकृमतो स्मान्पातुवामांगजन्मा ॥२॥ अविचलमणिबिम्बत् सत्फणानां सहस्रं। बहुलविमलभास्वद्भूषणोद्भासिगात्रः गुरुतरवरभक्त्यासक्तचित्ताङ्गभाजां। भवतु शिवसमृद्धौ चाश्वसेनिर्जिनेंद्रः ॥३॥ कुपितकरिमृगेश व्यालदावानलाब्धि। प्रहरणगदगुल्मातङ्कशङ्कापहर्त्ता। विकसितमुखपद्मः सत्पुरेसूरताख्ये। जयतु भुवनलक्ष्म्याभ्राजमानोजिनेंद्रः ॥४॥ इति पार्श्वजिनस्तोत्रम् ॥ * ॥    ॥ * ॥

॥*॥ यस्यज्ञान दयासिन्धो। र्दर्शनं श्रेयसे भुवं। सश्रीमान् पार्श्वतीर्थेशो। निषेव्यः सततं सतां॥१॥ वामासूनोर्यशः पुंजैरगाधस्यानघागुणाः। स्मर्यन्ते येन स स्वार्यी। भवेत्प्राचीनबर्हिषां ॥२॥ विहाय विषयासक्तान्। संसारिकसुरासुरान्। सेव्यतामच्युतो श्रीराःपार्श्व देवोपरः प्रभुः ॥३॥ जिनाःसर्वार्थदानेन। येन कल्पद्रुमाअपि। भवेदभ्यर्चितो लोके। सश्रियेचाम्रतायच ॥४॥ संस्तुतो मधुरश्लोकै। र्जैनलाभप्रदायकः। कल्याणकारको भूयात्। श्रीमान् शङ्खेश्वरःप्रभुः ॥५॥ इति श्रीसमस्यामयोशंखेश्वरपार्श्वजिनस्तुतिः ॥

॥*॥लक्ष्मीनिदानं गुरुकर्मदानं। सद्धर्मदानं जगतेददानं

नाव्यं सर्वदा सुप्रसन्नं । श्रीपा० ॥ ४ ॥ वर्षेरस्येख गदो न्नागचंद्र । संख्येमासे माधवे कृष्णपक्षे। प्राप्तं पुण्यै र्दृश्नं वस्य तंच । श्रीपा० ॥ इति शंखेश्वरजिनस्तवः ॥॥

॥॥ विशदसद्गुणराजि विराजितं । घनघनाघननादविभा जितं । भजतभक्तिभरेण रसेश्वरं । जगति पार्श्वजिनेशमन श्वरं ॥१॥ विविधवर्णविभूषितविग्रहाः । विहितदुष्टमदर्प्यक निग्रहाः । वसुयुगार्कमिताः सुखताकराः । जिनवराः प्रस वंतु शिवंकरा ॥ २ ॥ रुचिरवर्ण निवद्धमनिन्दितं । सुमनं सामकरैरभिवंदितं । निखिलसाधुजनाः खलुनिर्मिदं । जिन मतं नमतां चितशर्मदं ॥ ३ ॥ सकलभव्यसरोजविकाशिका । कुमततंतलसोद्धयनाशिका । जिनवराननपद्मगतोन्मुदा । भवतु वाग्जिनलाभशुभार्थदा ॥४॥ इतिपार्श्वजिनस्तोत्रम् ॥

॥॥श्रीमत्पार्श्वजिनेश्वरस्यविलसद् ज्ञानामृतांभोनिधेः। सद्भावेनपरस्वरूपविरतेसुत्क्यास्पदे तस्य पः । सन्मतप्रति विंवतस्तु सुतरां गौडीपुरोद्भासिनः । सोल्लासं प्रणिपत्यसत्य मनसा तलैव नित्यंस्मरे ॥ १ ॥ यत्पादांवुजदर्श नोतसुकधि योभव्या व्रजंतोध्वनि । स्पृश्यन्ते नहि दुष्टजंतुनिवहैर्वन्यै र्न वा तस्करैः नैवोज्वालदवानलैर्जलचराकीर्णै र्जलैर्जातुनो स श्रीपार्श्वविभुर्व्यचिन्त्यमहिमाह्यस्यानकेषां भवेत् ॥ २ ॥ हित्वांतः करणाद्द्रुतं कुटिलतां मोहादिनोद्भाविता । धृत्वा निर्मलभावनांच विधिनायद्भक्तिमातन्विता । लभ्य न्तेनरराजनिर्जरवर श्रेणीसुखानिक्रमा। न्मुक्तिश्रीरपिसै वसुदृमतचासंसेव्यतां विश्रुपाः ॥३॥ इतिश्रीगोडीपार्श्वजिन स्तोत्रं ॥॥

॥ ॐ ॥ आद्यः श्रीऋषभस्ततोजितजिनः श्रीसंभव स्तीर्थकृत् । सुश्रीमानभिनंदनश्चसुमतिः श्रीसद्मपद्मप्रभः । पृथ्वीकुक्षिभवः सुपार्श्वजिनपस्तीर्थेशचंद्रप्रभः । सर्वज्ञ सुविधिर्जिनोमुनिमतः श्रीशीतलःसौम्यहक् ॥ १ ॥ श्रेयांस प्रभुवासुपूज्यविमलानंतेशधर्मेश्वराः । शांतिःकुंथुररस्ततो जितरिपुर्मल्लिर्जिनः सुव्रतः । अर्हंतौनमिनेमिशुद्धमुनिपौ विश्वत्रयेविश्रुतौ । श्रीमत्पार्श्वजिनः प्रसिद्धमहिमा श्रीवर्द्ध मानः प्रभु ॥ २ ॥ एते श्रीजिनपुङ्गवाः परमचिद्रूपाश्चतु र्विंशति र्निश्शेषोत्तमभव्यजंतुहृदयां भोजप्रबोधोद्यताः । वंद्यास्ते सुरवृन्दवंद्यविशदस्तोकप्रजानिर्भय । श्रीसंपत्तिनि वास विक्रमपुरेसङ्गत्तितः प्रत्यहं ॥ ३ ॥ इति चतुर्विंशति जिनस्तवनम् ॥ ॐ ॥

---

अथ मङ्गलाष्टकं लिख्यते ।

॥ ॐ ॥ श्रीमन्नम्र सुरासुरेन्द्रमुकुटप्रद्योतिरत्नप्रभा । भास्वत्पादनखेन्दव प्रवचनांभोधौ व्यवस्थायिनः । ये सर्वे जिनसिद्धसूरिसुगता स्ते पाठकासाधवः । स्तुत्यायोगिजनैश्च पंचगुरवः कुर्वंतु मे मङ्गलं ॥ १ ॥ सम्यग्दर्शनबोधवृत्तममलं रत्नत्रयं पावनं । मुक्तिश्रीनगराधनं जिनपतेः स्वर्गापवर्ग प्रदः । धर्मःसूक्तिसुधाय चैत्यमखिलं जैनालयं श्रयालयं प्रोक्तं तत्त्रिविधं चतुर्विध ममीकुर्वंतु मे मङ्गलं ॥ २ ॥ नाभेया दिजिनाधिपास्त्रिभुवनेख्याताश्चतुर्विंशतिः । श्रीमन्तो भरते श्वरप्रभृतयो ये चक्रिणो द्वादश । ये विष्णुप्रतिविष्णुलाङ्गल धराः सप्ताधिकाविंशति । स्त्रैलोक्ये भयदात्रिषष्टिपुरुषाः ।

कुर्वंतुमे मङ्गलं ॥ ३ ॥ कैलाशे वृषभस्य निर्वृतिमही वीर स्य पावापुरी। चंपायां वसुपूज्यसज्जिनपतेः। सम्मेदशैलेर्हतां। शेषाणामपि चोर्ज्जयन्तशिखरेनेमीश्वरस्यार्हतो। निर्वाणाविनयः प्रसिद्धविभवाः कुर्वंतुमे मङ्गलं ॥ ४ ॥ ज्योतिर्व्यंतरभावनामरगृहे मेरौ कुलाद्रौस्थिता। जंबूशाल्मलिचैत्यशाखिषु तथावक्षाररूप्यादिषु। इक्ष्वाकारगिरौच कुंडलनगेद्वीपेच नंदीश्वरे। शैलेयेमनुजोत्तरे जिनगृहाः कुर्वंतु मे मङ्गलं ॥ ५ ॥ यो गर्भावतरोपिजय त्यर्हतां जन्माभिषेकोत्सवे। यो जातः परिनिक्रमेवचभवोयः केवलज्ञानभाक्। यः कैवल्यपुरप्रवेशमहिमासंभावितः स्वर्गिभिः। कल्याणानि च तानि पंचसत तं कुर्वंतु मे मंगलं ॥ ६ ॥ ये पंचौषधिऋद्धयः श्रुततपोवृद्धिंगताः पंचये। येचाष्टांगमहानिमित्तकुशला ये ष्टौविधाचारणा। पंचज्ञानधराश्च ये पि बलिनो ये बुद्धि ऋद्धीश्वरा। सप्तै तेसकलाश्च ते गणभृताः कुर्वंतु मे मङ्गलं ॥ ७ ॥ देव्यश्चाष्टजयादिका द्विगुणिता। विद्यादिका देवता। श्रीतीर्थंकर मातृकाश्च जनकायक्षाश्च यक्षीश्वराः। द्वात्रिंशत्त्रिदशाग्रहानिधि सुरादिक्कन्यकाश्चाष्टधा। दिक्पाला दश इत्यमीसुरगणाः। कुर्वंतु मे मङ्गलं ॥८॥ इत्थं श्रीजिनमङ्गलाष्टकमिदं कल्याण कालेर्हतां। पूर्वाह्लेपि महोत्सवेपि सततं श्रीसौख्यसंपत्करं। ये शृण्वंति पठंति तैश्च सुजनैर्धर्मार्थकामान्विता। लक्ष्मीराश्रयते विप्रायरहिताः कुर्वंतु मे मङ्गलं ॥ ९ ॥ इति श्रीमङ्गलाष्टकं सपूर्णम् ॥ ❋ ॥ ॥❋॥ ॥❋॥

॥❋॥ शिवं शुद्ध बुद्धं परं विश्वनाथं। नदेवंनबंधुर्नकर्म

नकर्त्ता नभंगं नसंगं नइच्छा नकामं। चिदानन्दरूपं नमोवीत रागं ॥ १ ॥ नबंधो नमोक्षो नरागादिलोकं। नजोगंनभोगं नव्याधिर्नशोकं। नक्रोधं नमानं नमाया नलोभं। चि० ॥२॥ नहस्तौ नपादौ नघ्राणं नजिह्वा। नचक्षुर्नकर्णं नवक्त्रं न निद्रा। नस्वादं नखेदं नवर्णं नमुद्रा। चि० ॥ ३ ॥ नजन्मं नमृत्यु नमोहं नचिंता। नक्षुद्रं नभीतं नकार्श्यं नतुंदा नस्वामीनभृत्यं नदेवोनमर्त्यो। चि० ॥४॥ त्रिदंडे त्रिखंडे हरेविश्वव्यापं। हृषीकेश विद्ध्वंशकर्म्मारिजालं। नपुण्यं न पापं नअक्ष्यानिग्राणं। चि० ॥५॥ नबाल्यं नवृद्धं नविद्विन्न मूढा। नछेद्यं नभेद्यं नमूर्त्तिर्न मोहा। नकृष्णं नशुक्लं न मोहं नतंद्रा। चि० ॥६॥ नआद्यं नमध्यं नमंत्यं नमन्या। नद्रव्यं नक्षेत्रं नदृष्टौ नभव्या। नगुर्वो नशिष्यो नआद्यो नदीनं चि० ॥ ८ ॥ इदंज्ञानरूपं स्वयंतत्ववेदी। नपूर्णं न शून्यं सचैतन्यरूपं। अन्योभिभिन्नं नपरमार्थमेकं। चि०॥८॥ आत्मारामगुणाकरंगुणनिधिंचैतन्यरत्नाकरं। सर्वंभूतगतागते सुखदुखज्ञातात्वयासर्वगं। त्रैलोक्याधिपतिस्वयंस्वमनसाध्यायंति योगेश्वराः। वंदे तं हरिवंश हर्षहृदयं श्रीमान भूदच्युतः ॥ ९ ॥ इति श्रीपरमात्मास्तोत्रं ॥ ॐ ॥

॥ॐ॥ दर्शनं देवदेवस्य। दर्शनं पापनाशनं। दर्शनं स्वर्ग सोपानं। दर्शनं मोक्षसाधनं॥१॥ दर्शनेन जिनेंद्राणां। साधूनां वंदनेनच। नतिष्टतिचिरं पापं। छिद्रहस्ते यथोदकं॥२ दर्शनं जिनसूर्यस्य। संसारध्वांतनाशनं। बोधनं चित्तपद्मस्य समस्तार्थप्रकाशकं॥३॥ दर्शनं जिनचंद्रस्य। सद्धर्मामृतवर्षणं जन्मदाहविनाशाय। वृंहणंसुखवारिधेः ॥ ४ ॥ जिनेभक्ति

जिनेभक्ति। जिनेभक्ति दिनेदिने। सदामेस्तु सदामेस्तु। सदा मेस्तु भवेभवे ॥५॥ नह्निवाता नह्निवाता। नह्निवाता जग त्वये। वीतरागसमोदेवो। न भूतोन भविष्यति॥६॥ अन्य थाशरणं नास्ति। त्वमेवशरणं मम। तस्मात् सर्व्व प्रयत्नेन रक्षरक्षजिनेश्वर॥७॥ वीतरागंमुखंदृष्ट्वा। पद्मरागसमप्रभं। नैकजन्मकृतंपापं। दर्शनेनविनश्यति॥८॥ अर्हंतो मंगलं नित्यं। सिद्धाजगतिमंगलं। मंगलंसाधवोमुख्यं। धर्म्मः सर्व्वत्र मंगलं ॥ ९ ॥ लोकोत्तमाह्यर्हंतः। सिद्धालोगोत्तमाः सदा। लोकोत्तमोयतीशानां। धर्मो लोकोत्तमोर्हतां॥१०॥ शरणं सर्व्वदार्हंतः। सिद्धाशरणमंगिलां। साधवः शरणं लोके। धर्म्म शरणमर्हतां॥ ११ ॥ इति श्रीनमस्कारस्तोत्रं संपूर्णम ॥ ॥ ॥ ॥

---

## ॥ अथ ऋषिमंडल स्तोत्र लि ॥

॥ ॥ आद्यंताक्षरसंलक्ष्यं। मक्षरंव्याप्ययत्स्थितं। अग्निज्वालासमंनादं। बिंदुरेखा समन्वितं॥१॥ अग्निज्वालासमाक्रांतं। मनोमलविशोधकं। देदीप्यमानंहृत्पद्मे। तत्पदंनौमिनिर्मलं॥ २॥ अर्हमित्यक्षरंब्रह्म। वाचकं परमेष्ठिनः। सिद्धचक्रस्यसद्बीजं। सर्वतः प्रणिदध्महे॥ ३ ॥ ॐ नमोर्हद्भ्यईशेभ्य। ॐ सिद्धेभ्योनमोनमः। ॐ नमः सर्वसूरिभ्य। उपाध्यायेभ्य ॐ नमः॥ ४॥ ॐ नमः सर्वसाधुभ्य। ॐ ज्ञानेभ्यो नमोनमः। ॐ नमस्तत्त्वदृष्टिभ्य। श्चारित्रेभ्यस्तु ॐ नमः॥ ५ ॥ श्रेयसेस्तु श्रियेस्त्वेत। दर्हदाद्यष्टकंशुभं। स्थानेष्वष्टसुविन्यस्तं। पृथग्बीजसमन्वितं॥ ६ ॥ आद्यं

पदं शिखां रक्षे। त्परं रक्षतु मस्तकं। द्वतोयं रक्षेन्नेत्रे द्वे। तुर्यं रक्षेच्च नासिकां ॥ ७ ॥ पंचमंतु मुखं रक्षेत्। षष्ठं रक्षे च्च घंटिकां। नाभ्यंतं सप्तमं रक्षे। द्रक्षेत्पादांतमष्टमं ॥ ८॥ पूर्वं प्रणवतः सांतः। सरेफोद्व्यब्धिपंचषान्। सप्ताष्टदशसूर्यांकान्। श्रितोविंदुस्वरान् पृथक् ॥ ६ ॥ पूज्यनामाक्षरा आद्याः। पंचातोज्ञानदर्शन। चारित्रेभ्यो नमो मध्ये। ह्रींसांतह्समलंकृतः ॥१०॥ ॥ ॐ। ह्रां। ह्रीं। ह्रुं। ह्रूं ह्रें। ह्रैं। ह्रौं। ह्रः असिआउसाज्ञानदर्शनचारित्रेभ्यो नमः ॥ ॥ *जंबूवृक्षधरोद्वीपः। क्षारोदधिसमावृतः। अर्हदाद्यष्टकैरष्ट। काष्ठाधिष्टैरलंकृतः ॥ ११ ॥ तन्मध्य संगतोमेरुः। कूटलक्षैरलंकृतः। उच्चैरुच्चैस्तरस्तार। स्तारा मंडलमंडितः॥१२॥ तस्योपरिसकारांतं बीजमध्यास्यसर्वगं। नमामिबिंबमार्हंत्यं। ललाटस्थं निरंजनं ॥ १३ ॥ अक्षयं निर्मलंशांतं। बहुलं जाड्यतोज्झितं। निरीहं निरहंकारं। सारं सारतरं घनं ॥ १४ ॥ अनुद्धतं शुभं स्फीतं। सात्त्विकं राजसंमतं। तामसं चिरसंबुद्धं। तैजसं शर्वरीसमं ॥१५॥ साकारंच निराकारं। सरसं विरसंपरं। परापरं परातीतं। परंपर परापरं ॥१६॥ एकवर्णं द्विवर्णं च। त्रिवर्णं तुर्यवर्णकं। पंचवर्णं महावर्णं। सपरंच परापरं ॥१७॥ सकलं निष्कलंतुष्टं। निर्वृतं भ्रांतिवर्जितं। निरंजनं निराकारं। निर्लेपं वीतसंश्रयं ॥१८॥ ईश्वरं ब्रह्मसंबुद्धं। बुद्धं सिद्धं मतंगुरु। ज्योतीरूपं महादेवं। लोकालोक प्रकाशकं ॥१९॥ अर्हदा

* इति ऋषिमण्डलमूलमन्त्रः आराधकस्य शुभः नवबीजाक्षरः षोडशशुद्धाक्षरः ।

ख्यस्तु वर्णातः । सरेफोविंदुमंडितः । तुर्यस्वरसमायुक्तो बहुध्यानादमालितः ॥ २० ॥ अस्मिन् बीजे स्थिताः सर्वे । वृषभाद्याजिनोत्तमाः। वर्णैर्निजैर्निजैर्युक्ता । ध्यातव्यास्तत्र संगताः ॥ २१ ॥ नादश्चंद्रसमाकारो । विंदुर्नीलसमप्रभः । कलारुणसमासांतः। स्वर्णाभः सर्वतोमुखः ॥ २२ ॥ शिरः संलीन ईकारो । विनीलोवर्णतः स्मृतः । वर्णानुसारसंलीनं तीर्थकृन्मंडलंस्तुमः ॥ २३ ॥ चंद्रप्रभपुष्पदंतौ । नादस्थिति समाश्रितौ । विंदुमध्यगतौनेमि । सुव्रतौ जिनसत्तमौ ॥२४॥ पद्मप्रभवासुपूज्यौ । कलापदमधिष्टितौ । शिरईस्थितिसंलीनौ । पार्श्वमल्लीजिनेश्वरौ ॥२५॥ शेषास्तीर्थकृतः सर्वे । हर स्थाने नियोजिताः । मायाबीजाक्षरंप्राप्ता । श्चतुर्विंशतिरर्हतां ॥ २६ ॥ गतरागद्वेषमोहाः । सर्वपापविवर्जिताः । सर्वदाः सर्वकालेष । ते भवंतु जिनोत्तमाः ॥ २७ ॥ देवदेवस्यचक्रं तस्य चक्रस्य या विभा । तयाछादित सर्वाङ्गं मामांहिनस्तु डाकिनी ॥२८॥ देवदेवस्य० । मामांहिनस्तु राकिनी ॥ २९ ॥ देवदे० । मामांहिनस्तु लाकिनी ॥ ३० ॥ देव० । मामांहिनस्तु काकिनी ॥३१॥ देवदे० । मामांहिनस्तु शाकिनी ॥ ३२ ॥ देव० । मामांहिनस्तु हाकिनी ॥ ३३ ॥ देव० । मामांहिनस्तु याकिनी ॥ ३४ ॥ देव० । मामांहिंसंतु पन्नगाः ॥ ३५॥ देव० मामांहिंसंतु हस्तिनः ॥३६॥ देवदे० । मामांहिंसंतुराक्षसाः ॥ ३७ ॥ देव० । मामांहिंसंतुवह्नयः ॥३८॥ देव० । मामांहिंसंतु सिंहकाः ॥३९॥ देव० । मामांहिंसंतु दुर्जनाः ॥४०॥ देव० । मामांहिंसंतु भूमिपाः ॥४१॥ श्रीगौतमस्ययामुद्रा । तस्यायाभुविलब्धयः । ताभिरभ्यु

द्युतज्योति। रक्षंसर्वनिधीश्वरः ॥४२॥ पातालवासिनो देवा। देवाभूपीठिवासिनः। स्वर्वासिनोपि ये देवाः। सर्वे रक्षंतु मामितः ॥४३॥ येऽवधिलब्धयो येतु। परमावधिलब्धयः। ते सर्वे मुनयोदेवाः। मांसं रक्षंतु सर्वदा ॥ ४४ ॥ दुर्जनाभूतवे ताला:। पिशाचामुद्गलास्तथा। तेसर्वेप्युपशाम्यंतु। देवदेव प्रभावतः ॥ ४५ ॥ ॐ ह्रीं श्रीश्चधृतिर्लक्ष्मी। गौरी। चंडी सरस्वती। जयां वा विजयानित्या। क्लिन्नाजितामदद्रवा ॥४६॥ कामांगाकामबाणाच। सानंदानंदमालिनी। माया मायाविनी रौद्री। कला कालीकलिप्रिया ॥ ४७ ॥ एताः सर्वामहादेव्यो। वर्त्तंतेयाजगत्त्रये। मह्यंसर्वाः प्रयच्छंतु। कांतिंकीर्त्तिं धृतिं मतिं॥ ४८ ॥ दिव्यो गोप्यः सुदुः प्राप्यः श्रीऋषिमंडलस्तवः। भाषितस्तीर्थनाथेन जगत्त्राण कृतेनघः ॥ ४९ ॥ रणेराजकुलेवह्नौ। जलेदुर्गे गजे हरौ। श्मशाने विपिने घोरे। स्मृतो रक्षति मानवं ॥५०॥ राज्यभ्रष्टा निजं राज्यं। पदभ्रष्टा निजं पदं। लक्ष्मी भ्रष्टा निजां लक्ष्मीं। प्राप्नुवंति न संशयः ॥५१॥ भार्यार्थीलभते भार्यां। पुत्रार्थी लभते सुतं। वित्तार्थी लभते वित्तं। नरः स्मरण मात्रतः ॥ ५२ ॥ स्वर्णेरूप्ये पटेकांस्ये। लिखित्वा यस्तुपूजयेत्। तस्यैवाष्टमहासिद्धि। गृहेवसति शाश्वती ॥ ५३ ॥ भूर्जपत्रेलिखित्वेदं। गलके मूर्ध्नि वा भुजं। धारितं सर्वदा दिव्यं। सर्वभीति विनाशकं ॥ ५४ ॥ भूतैः प्रेतैर्ग्रहै र्यक्षैः। पिशाचैर्मुद्गलैर्मलै। वातपित्तकफोद्रेकैर्मुच्यते नात्रसंशयः ॥५५॥ भूर्भुवःस्वस्त्रयीपीठः। वर्त्तिनः शाश्वता जिनाः। तैःस्तुतैर्वंदितैर्दृष्टै यत्फलं तत्फलं स्मृतौ ॥ ५६॥

एतद्गोप्यं महास्तोत्रं । न देयं यस्यकस्यचित् । मिथ्यात्ववासिने दत्ते । बालहत्यापदेपदे ॥ ५७ ॥ आचाम्लादितपः कृत्वा । पूजयित्वाजिनावलीं । अष्टसाहस्रिको जापः। कार्यस्तत्सिद्धिहेतवे ॥ ५८ ॥ शतमष्टोत्तरंप्रात । र्येपठंति दिने दिने । तेषां नव्याधयो देहे । प्रभवंति नचापदः ॥ ५९ ॥ अष्टमासावधिंयावत् । प्रातःप्रातस्तु यः पठेत् । स्तोत्रमेतन्महातेजो । जिनबिंबं स पश्यति ॥ ६० ॥ दृष्टे सत्यर्हतोबिंबे भवेसप्तमके ध्रुवं । पदंप्राप्नोतिशुद्धात्मा । परमानंदनंदितः ॥६१॥ विश्ववंद्यो भवेध्याता । कल्याणानिचसोऽश्नुते । गत्वा स्थानंपरं सोपि । भूयस्तु न निवर्त्तते ॥ ६२ ॥ इदं स्तोत्रं महास्तोत्रं । स्तुतीनामुत्तमंपरं । पठनात्स्मरणाज्जापा लभ्यते पदमुत्तमं ॥ ६३ ॥ इति श्रीऋषिमंडलस्तोत्रं ॥ ॥ क्षेपक श्लोकान्निराकृत्यमूलयंत्रकल्पानुसारेण । लिखितं । गणिः श्रीक्षमाकल्याणो पाध्यायैः तस्योपरि मयापि लिखितं इदं स्तोत्रं ॥ ॥ ॥ ॥ ॥ ॥

॥ अथ भक्तामरस्तोत्रलि ॥

॥ ॥ भक्तामरप्रणत मौलिमणिप्रभाणा । मुद्द्योतिकंदलितपापतमोवितानं । सम्यक् प्रणम्य जिनपादयुगंयुगादा । वालंबनंभवजलेपततांजनानां ॥ १ ॥ यः संस्तुतः सकल वाङ्मयतत्वबोधादुद्भूतबुद्धिपटुभिः सुरलोकनाथैः स्तोत्रैर्जगत्त्रितय चित्तहरैरुदारैः । स्तोष्ये किलाहमपि तं प्रथमंजिनेंद्रं ॥२॥ युग्मं । बुद्ध्याविनापिविबुधार्चितपादपीठ । स्तोतुंसमुद्यतमति र्विगतत्रपोहं । बालंविहायजल

संस्थितमिंदुबिंब । मन्यः क इच्छति जनः सहसाग्रहीतुं ॥३॥ वक्तुं गुणान्गुणसमुद्र शशांक कांतान् । कस्ते क्षमः सुरगुरु प्रतिमोपि बुद्ध्या । कल्पांतकाल पवनोद्धतनक्रचक्रं । कोवात रीतुमलमंबुनिधिं भुजाभ्यां ॥४॥ सोहं तथापि तवभक्तिवशा न्मुनीश । कर्त्तुं स्तवं विगतशक्तिरपि प्रवृत्तः । प्रीत्यात्मवीर्य मविचार्य मृगोमृगेन्द्रं । नाभ्येति किं निजशिशोः परिपाल नार्थं ॥ ५ ॥ अल्पश्रुतं श्रुतवतं परिहासधाम । त्वद्भक्तिरेव मुखरीकुरुते बलान्मां । यत्कोकिलःकिलमधौमधुरंविरौ ति । तच्चारुचाम्रकलिकानिकरैकहेतु ॥ ६ ॥ त्वत्संस्तवेन भवसंततिसन्निबद्धं । पापंक्षणात्क्षयमुपैति शरीरभाजां । आक्रांतलोकमलिनीलमशेषमाशु । सूर्यांशुभिन्न मिव शा र्वरमंधकारं ॥ ७ ॥ मत्वेतिनाथतवसंस्तवनंमयेद । मार भ्यते तनुधियापि तवप्रभावात् । चेतोहरिष्यतिसतां नलिनी दलेषु । मुक्ताफलद्युतिमुपैतिननूदबिंदुः ॥ ८ ॥ आस्तांतव स्तवनमस्तसमस्तदोषं । त्वत्संकथापि जगतां दुरितानिहंति । दूरे सहस्रकिरणः कुरुते प्रभैव । पद्माकरेषु जलजानिविका शभांजि ॥ ९ ॥ नात्यद्भुतं भुवनभूषण भूतनाथ । भूतै गुणैर्भु वि भवंतमभिष्टुवंतः । तुल्या भवंति भवतोननु तेन किंवा । भूत्याश्रितं य इहनात्मसमंकरोति ॥ १० ॥ दृष्ट्वाभवंत मनि मेषविलोकनीयं । नान्यत्रतोषमुपयाति जनस्यचक्षुः पीत्वा पयः शशिकरद्युतिदुग्धसिंधोः । क्षारंजलंजलनिधेरसि तुं क इच्छेत् ॥ ११ ॥ यैः शांतरागरुचिभिः परमाणुभिस्त्वं । निर्मापितस्त्रिभुवनैक ललामभूत । तावंतएवखलुते प्यणवः पृथिव्यां । यत्ते समानमपरंनहिरूपमस्ति ॥ १२ ॥ वक्त्रं क

तेसुरनरोरगनेत्रहारि। निःशेषनिर्जितजगत्त्रितयोपमानं। बिंबं कलंकमलिनं क्व निशाकरस्य। यद्वासरे भवति पांडुपलाशकल्पं॥१३॥ संपूर्णमंडलशशांककलाकलाप। शुभ्रा गुणास्त्रिभुवनं तवलंघयंति। ये संश्रितास्त्रिजगदीश्वरनाथमेकं। कस्तान्निवारयति संचरतोयथेष्टं ॥ १४ ॥ चित्रं किमत्रयदितेत्रिदशांगनाभि। र्नीतं मनागपिमनो नविकारमार्गं। कल्पांतकालमरुताचलिताचलेन। किं मंदराद्रिशिखरंचलितंकदाचित् ॥ १५ ॥ निर्धूमवर्त्तिरपवर्जिततैलपूरः। कृत्स्नंजगत्त्रयमिदं प्रकटी करोषि। गम्यो न जातु मरुतां चलिताचलानां। दीपोपरस्त्वमसिनाथ जगत्प्रकाशः॥ १६ ॥ नास्तं कदाचिदुपयासिनराहुगम्य। स्पष्टी करोषि सहसायुगपज्जगंति। नांभोधरोदरनिरुद्धमहाप्रभावः। सूर्यातिशायिमहिमासि मुनींद्रलोके ॥ १७ ॥ नित्योदयं दलितमोहमहांधकारं। गम्यं न राहुवदनस्य न वारिदानां। विभ्राजते तव मुखाब्ज मनल्पकांति। विद्योतयज्जगदपूर्वशशांकबिंबं ॥ १८ ॥ किं शर्वरीषु शशिनाह्निविवस्वता वा। युष्मन्मुखेंदुदलितेषु तमस्सुनाथ। निष्पन्नशालिवनशालिनिजीवलोके। कार्यं कियज्जलधरैर्जलभारनम्रैः॥ १९ ॥ ज्ञानं यथात्वयि विभाति कृतावकाशं। नैवं तथा हरिहरादिषु नायकेषु। तेजःस्फुरन्मणिषु याति यथा महत्वं। नैवंतु काचशकले किरणाकुलेपि॥२०॥ मन्ये वरं हरिहरादय एव दृष्टा। दृष्टेषु येषु हृदयं त्वयि तोषमेति। किं वीक्षितेन भवताभुवियेन नान्यः। कश्चिन्मनोहरति नाथ भवांतरेपि॥२१॥ स्त्रीणांशतानि शतशोजनयंतिपुत्रान्

नान्यासुतं त्वदुपमं जननीप्रसूता । सर्व्वादिशोदधति भानि
सहस्ररश्मिं । प्राच्येव दिग्जनयति स्फुरदंशुजालं ॥ २२ ॥
त्वामामनन्ति मुनयः परमं पुमांस । मादित्यवर्णममलं तम
सः पुरस्तात् । त्वामेव सम्यगुपलभ्यजयन्ति मृत्युं । नान्यः
शिवः शिवपदस्य मुनींद्रपन्थाः ॥२३॥ त्वामव्ययं विभुमचिं
त्यमसंख्यमाद्यं । ब्रह्माणमीश्वरमनन्तमनङ्गकेतु । योगी-
श्वरं विदितयोगमनेकमेकं । ज्ञानस्वरूपममलं प्रवदन्ति
सन्तः ॥२४॥ बुद्धस्त्वमेव विबुधार्च्चितबुद्धिबोधा । त्वंशं
करोसि भुवनत्रय शङ्करत्वात् । धातासि धीरशिवमार्गविधे
र्विधाना । व्यक्तं त्वमेव भगवन् पुरुषोत्तमोसि ॥२५॥ तुभ्यं
नम स्त्रिभुवनार्त्तिहराय नाथ । तुभ्यं नमः क्षितितलामलभू
षणाय । तुभ्यं नमस्त्रि जगतः परमेश्वराय । तुभ्यं नमोजिन
भवो दधिशोषणाय ॥२६॥ कोविस्मयोत्र यदि नामगुणैर-
शेषै । स्त्वं संश्रितो निरवकाशतया मुनीश । दोषैरुपात्त
विबुधाश्रयजातगर्व्वैः स्वप्नांतरेपि नकदाचिदपीक्षितोसि ॥
२७॥ उच्चैरशोकतरुसंश्रितमुन्मयूखा । माभाति रूपममलं
भवतो नितान्तं । स्पष्टोल्लसत्किरणमस्ततमोवितानं । बिम्बं
रवेरिवपयोधरपार्श्ववर्त्ति ॥ २८ ॥ सिंहासने मणिमयूख
शिखाविचित्रे । विभ्राजते तव वपुः कनकावदातं । बिम्बं
वियद्विलसदंशुलतावितानं । तुङ्गो दयाद्रिशिरसीव सहस्र
रश्मेः ॥२९॥ कुंदावदातचलचामरचारुशोभं । विभ्राजते
तव वपुः कलधौतकांतं । उद्यच्छशांकशुचिनिर्झरवारिधार ।
मुच्चैस्तटं सुरगिरेरिव शातकौंभं ॥३०॥ छत्रत्रयं तवविभाति
शशांककान्त । मुच्चैः स्थितं स्थगितभानुकरप्रतापं । मुक्ताफल

प्रकरजालविवृद्धिशोभं । प्रख्यापयत्त्रिजगतः परमेश्वरत्वं ॥ ३१॥ उन्निद्रहेमनवपङ्कज पुंजकान्ति। पर्युल्लसन्नखमयूख शिखाभिरामौ । पादौ पदानि तव यत्र जिनेंद्रधत्तः । पद्मानि तत्र विबुधाः परिकल्पयन्ति ॥३२॥ इत्थं यथा तव विभूतिरभूज्जिनेंद्र । धर्मोपदेश न विधौ न तथा परस्य । याद्दक् प्रभादिनकृतः प्रहतान्धकारा । ताद्दक्कुतो ग्रहगणस्य विकाशिनोपि ॥३३॥ श्च्योतन्मदा विलविलोल कपोलमूल । मत्तभ्रमद्भ्रमरनादविवृद्धकोपं । ऐरावताभमिभमुद्धतमापतन्तं। दृष्ट्वा भयं भवति नो भवदाश्रितानां ॥३४॥ भिन्नेभकुंभगलदुज्ज्वलशोणिताक्त । मुक्ताफलप्रकरभूषितभूमिभागः । बद्धक्रमः क्रमगतं हरिणाधिपोपि । नाक्रामति क्रमयुगाचलसंश्रितंते ॥३५॥ कल्पान्तकालपवनोद्धतवह्निकल्पं । दावानलं ज्वलितमुज्ज्वलमुत्स्फुलिङ्गं । विश्वं जिघत्सुमिव सम्मुखमापतन्तं । त्वंनामकीर्त्तनजलं शमयत्यशेषं ॥३६॥ रक्तेक्षणं समदकोकिलकण्ठनीलं । क्रोधोद्धतं फणिनमुत्फणमापतन्तं । आक्रामति क्रमयुगेन निरस्तशङ्कः । त्वन्नामनागदमनो हृदि यस्य पुंसः ॥ ३७ ॥ वल्गत्तुरङ्गगजगर्ज्जितभीमनाद । माजौ बलम्बलवतामपि भूपतीनां । उद्यद्दिवाकरमयूखशिखापविद्धं । त्वत्कीर्त्तनात्तमइवाशुभिदामुपैति ॥ ३८ कुन्ताग्रभिन्नगजशोणितवारिवाह । वेगावतारतरणातुरयोधभीमे । युद्धे जयं विजितदुर्ज्जयजेयपक्षाः । त्वत्पादपंकजवनाश्रयिणो लभन्ते॥३९॥ अम्भोनिधौ क्षुभितभीषणनक्रचक्र। पाठीनपीठभयदोल्बणवाडवाग्नौ । रङ्गत्तरंगशिखरस्थितयानपात्रा। त्रासं विहायभवतः स्मरणाद्व्रजन्ति

॥४०॥ उद्भूतभीषणजलोदरभारभुग्नाः। शोच्यां दशामुपगताश्च्युतजीविताशाः। त्वत्पादपङ्कजरजोमृतदिग्धदेहा। मर्त्त्याभवन्तिमकरध्वजतुल्यरूपाः॥ ४१ ॥ आपादकंठमुरुशृंखलवेष्टिताङ्गा। गाढं बृहन्निगडकोटिनिघृष्टजंघाः त्वन्नाम मंत्रमनिशं मनुजाः स्मरन्तः। सद्यः स्वयं विगतबंधभया भवन्ति ॥ ४२ ॥ मत्त द्विपेंद्रमृगराजदवानलाहि संग्रामवारिधि महोदरबन्धनोत्थं। तस्याशु नाशमुपयाति भयं भियेव। यस्तावकं स्तवमिमं मतिमानधीते ॥ ४३ ॥ स्तोत्रस्रजं तव जिनेंद्रगुणैर्निबद्धां। भक्त्या मया रुचिरवर्ण विचित्रपुष्पां। धत्ते जनो य इह कण्ठगतामजस्रं। तंमानतुंगमवशासमुपैति लक्ष्मीः ॥ ४४ ॥ ※ ॥ इतिश्रीभक्तामरस्तोत्रम् ॥ ※ ॥ २ ॥ ॥ ※ ॥ ॥ ※ ॥

## ॥ अथ कल्याणमंदिरस्तोत्रलि ॥

॥※॥ कल्याणमन्दिरमुदारमवद्यभेदि। भीता भयप्रदमनिन्दितमंघ्रिपद्मं। संसारसागरनिमज्जदशेषजंतु। पोतायमानमभिनम्य जिनेश्वरस्य ॥१॥ यस्य स्वयं सुरगुरुर्गरिमांबुराशेः। स्तोत्रं सुविस्तृतमतिर्नविभुर्विधातुं। तीर्थेश्वरस्य कमठस्मयधूमकेतो। स्तस्याहमेष किलसंस्तवनं करिष्ये ॥२ युग्मं ॥ सामान्यतोपि तव वर्णयितुं स्वरूप। मस्मादृशाः कथमधीश भवंत्यधीशाः। धृष्टोपि कौशिकशिशुर्यदिवादिवांधो। रूपं प्ररूपयति किं कलघर्मरश्मेः ॥३॥ मोहक्षयादनुभवन्नपि नाथमर्त्यो। नूनं गुणान्गुणयितुं न तव क्षमेत। कल्पान्तवांतपयसः प्रकटोपि यस्मा। न्मीयेत केन जलधे

नेंनु रत्नराशिः ॥ ४ ॥ अभ्युद्यतोस्मि तवनाथजडाशयो
पि । कर्त्तुं स्तवंलसदसंख्यगुणाकरस्य । बालोपि किं न नि
जबाहुयुगं वितत्य । विस्तीर्णतां कथयति स्वधियांबुराशेः
॥ ५ ॥ ये योगिनामपि न यांति गुणास्तवेश । वक्तुं कथं
भवति तेषु ममावकाशः । जातातदेव मसमीक्षितकारिते
यं । जल्पंति वा निजगिरा ननु पक्षिणोपि ॥ ६ ॥ आस्ता
मचिंत्यमहिमा जिनसंस्तवस्ते । नामापिपाति भवतो भव
तो जगंति ॥ तीव्रातपोपहतपांथजनान्निदाघे । प्रीणातिपद्म
सरसः सरसोनिलोपि ॥७॥ हृद्वर्त्तिनित्वयि विभोशिथली
भवंति । जंतोःक्षणेन निबिडा अपिकर्मबंधाः । सद्योभुजंगम
मया इव मध्यभाग । मभ्यागते वनशिखंडिनिचंदनस्य ॥८॥
मुच्यंत एव मनुजाः सहसाजिनेन्द्र । रौद्रैरुपद्रवशतैस्त्वयि
वीक्षितेपि । गोस्वामिनि स्फुरिततेजसि दृष्टमात्रे । चौरैरि
वाशुपशवः प्रपलायमानैः ॥ ९ ॥ त्वंतारकोजिन कथंभवि
नांत एव । त्वामुद्वहंति हृदयेन यदुत्तरंतः । यद्वादृतिस्तरति
य ज्जलमेषनून । मंतर्गतस्य मरुतः सकिलानुभावः ॥१०॥
यस्मिन्हर प्रभृतयोपि हतप्रभावाः । सोपित्वया रति
पतिः क्षपितःक्षणेन । विध्यापिताहुतभुजः पयसाथ येन ।
पीतं न किं तदपिदुर्द्धरवाडवेन ॥ ११ ॥ स्वामिन्ननल्प
गरिमाणमपिप्रपन्ना । स्त्वांजंतवः कथमहो हृदये
दधानाः । जन्मोदधिं लघुतरंत्यतिलाघवेन । चिंत्यो न
हंतमहतां यदिवा प्रभाव ॥ १२ ॥ क्रोधस्त्वया यदि विभो
प्रथमंनिरस्तो । ध्वास्तास्तदावतकथं किल कर्मचौराः ।
प्लोषत्यमुत्र यदिवा शिशिरापिलोके । नीलद्रुमाणि विपिना

नि न किंहिमानी ॥ १३ ॥ त्वां योगिनो जिन सदा परमा
त्मरूप । मन्वेषयंति हृदयां बुजकोशदेशे । पूतस्य निर्मल
रुचेर्यदिवा किमन्य । दक्षस्य संभविपदं ननु कर्णिकाया
॥ १४ ॥ ध्यानाज्जिनेश भवतो भविनः क्षणेन । देहंविहाय
परमात्मदशां ब्रजंति । तीव्रानलादुपलभाव मुपास्य लोके ।
चामीकरत्वमचिरा दिवधातुभेदाः ॥ १५ ॥ अन्तः सदैव
जिन यस्य विभाव्यसेत्वं ॥ भव्यैः कथं तदपि नाशयसे शरी
रं । एतत्स्वरूपमथ मध्यविवर्त्तिनोहि । यद्विग्रहं प्रशमयं
ति महानुभावाः ॥१६॥ आत्मामनीषिभिरयंत्वदभेदबुद्ध्या ।
ध्यातो जिनेंद्र भवतीह भवत्प्रभावः । पानीयमप्यमृतमित्य
नुचिंत्यमानं । किं नाम नो विषविकारमपाकरोति ॥ १७ ॥
त्वामेव वीततमसं परवादिनोपि । नूनं विभो हरिहरादिधि
याप्रपन्नाः । किंकाचकामलिभिरीश सितोपि शंखो
नो गृह्यते विविधवर्ण विपर्ययेण ॥ १८ ॥ धर्मोपदेशसम
ये सविधानुभावा । दास्तां जनोभवति ते तरुरप्यशोकः । अ
भ्युद्गते दिनपतौ समहीरुहोपि । किंवा विबोधमुपयाति
न जीवलोकः ॥ १९ ॥ चित्रं विभो कथमवाङ्मुखवृंतमेव ।
विष्वक्पतत्यविरला सुरपुष्पवृष्टिः । त्वद्गोचरे सुमनसां यदि
वा मुनीश । गच्छंति नूनमधएव हि बंधनानि ॥ २० ॥ स्थाने
गभीरहृदयोदधिसंभवायाः । पीयूषतां तव गिरः समुदी
रयंति । पीत्वा यतः परमसंमदसंगभाजो । भव्याव्रजंति तर
सा प्यजरामरत्वं ॥२१॥ स्वामिन् सुदूरमवनम्य समुत्पतन्तो ।
मन्ये वदंति शुचयः सुरचामरौघाः । येऽस्मै नतिं विदधते
मुनिपुंगवाय । ते नूनमूर्ध्वगतयः खलु शुद्धभावाः ॥ २२ ॥

घमदभ्रभीम। भ्रश्यत्तडिन्मुशलमांसलघोरधारं। दैत्येन मुक्त मथदुस्तरवारिदध्रे। तेनैव तस्य जिनदुस्तरवारिकृत्यं ॥३२॥ ध्वस्तोर्द्ध्वकेशविकृताकृतिमर्त्यमुंड। प्रालंबभृद्भयदवक्त्रविनिर्यदग्निः। प्रेतव्रजः प्रतिभवंतमपीरितोयः। सोस्याभवत्प्रतिभवं भवदुःखहेतु ॥ ३३ ॥ धन्यास्त एव भुवनाधिप ये त्रिसंध्य। माराधयंति विधिवद्विधुतान्यकृत्या। भक्त्योल्लसत्पुलकपक्ष्मलदेहदेशाः। पादद्वयंतव विभोभुवि जन्मभाजः ॥ ३४ ॥ अस्मिन्नपार भववारिनिधौ मुनीश। मन्येन मे श्रवणगोचरतां गतोसि। आकर्णितेतु तव गोत्रपवित्रमंत्रे। किंवा विपद्विषधरी सविधंसमेति ॥ ३५ ॥ जन्मांतरेपि तव पादयुगं न देव। मन्ये मया महितमीहितदानदक्षं। तेनेह जन्मनि मुनीशपराभवानां। जातो निकेतन महं मथिताशयानां ॥ ३६ ॥ नूनं न मोहतिमिरावृतलोचनेन। पूर्वं विभो सकृदपि प्रविलोकितोसि। मर्मोविधौ विधुरयंतिहि मामनर्थाः। प्रोद्यत्प्रबंधगतयः कथमन्यथैते ॥ ३७ ॥ आकर्णितोपि महितोपि निरीक्षितोपि। नूनं नचेतसि मया विधृतोसिभक्त्या। जातोस्मि तेन जनबांधवदुःखपात्रं। यस्मात्क्रियाः प्रतिफलंतिन भावशून्याः ॥ ३८ ॥ त्वं नाथ दुःखिजनवत्सल हे शरण्य। कारुण्यपुण्यवसते वशिनांवरेण्य। भक्त्यानतेमयि महेश दयांविधाय। दुःखांकुरोद्दलनतत्परतां विधेहि ॥३९॥ निःसंख्यसारशरणंशरणंशरण्य। मासाद्यसादितरिपुप्रथितावदातं। त्वत्पादपंकजमपि प्रणिधान वंध्यो। वध्योस्मिचेद्भुवनपावनहाहतोस्मि ॥४०॥ देवेन्द्रवंद्य विदिताखिलवस्तुसार। संसारतारकविभोभुवनाधिनाथ।

नाथस्व देव करुणाविद मांपुनीहि। सीदंतमद्यभयद व्यसनां वुराशे ॥ ४१ ॥ यद्यस्तिनाथ भवदंघ्रिसरोरुहाणां। भक्तेः फलंकिमपिसंतत संचितायाः। तन्मे त्वदेकशरणस्यशरण्यभूयाः। स्वामीत्वमेव भुवनेत्र भवांतरेपि ॥ ४१ ॥ इत्थं समाहितधियो विधिवज्जिनेंद्र। सांद्रोल्लसत्पुलक कंचुकितांगभागाः त्वद्विंब निर्मलमुखांबुजबद्धलक्षया। येसंस्तवंतवविभो रचयंतिभव्याः ॥४३॥ जननयनकुमुदचंद्रं। प्रभासुराः स्वर्गसंपदोभुक्ता। ते विगलितमलनिचया। अचिरान्मोक्षं प्रपद्यंते ॥ ४४ ॥※॥ इति कल्याणमंदिरस्तोत्रं संपूर्णम् ॥ ※ ॥

-॥ अथ सेत्रुंजरासलि ॥ ४ ॥

॥ ※ ॥ श्रीरिसहेसरपायनमी। आणीमनआणंद। रासभणुंरलियामणो। सेत्रुंजैनोसुखकंद ॥ १ ॥ संवत्च्यारसतोतरै। हुवाधनेसरसूर। तिणसेत्रुंजमाहातमकियो। शिलादित्यहजूर ॥ २ ॥ वीरजिणंदसमोसर्या। सेत्रुंजैऊपर जेम। इन्द्रादिक आगलिकह्यो। सेत्रुंजैमाहातमएम ॥३॥ सेत्रंजतीरथसारिषो। नहीछै तीरथकोय। स्वर्गम्रत्युपातालमैं। तीरथसगलाजोय ॥४॥ नामैनवनिधिसंपजै। दीठांदुरितपुलाय। भेटंतां भवभयटलै। सेवंतांसुखथाय ॥५॥ जंबूनामैदीपए। दक्षिणभरतमझार। सोरठदेससुहामणो। तिहांछै तीरथसार ॥ ६ ॥※॥ ढालपहिली: रामगिरी ॥※॥ ॥ सेत्रुंजानेंश्रीपुंडरीक। सिद्धक्षेत्रकहुं तहतीक। विमलाचलनैकहुंपरणाम। एसेत्रुंजैनाइक वीसनांम ॥ १ ॥ सुरगिरनें महागिरपुन्यरास। श्रीपदपर्वतइंद्रप्रकास। महातीर

यपुरवैसुखकांम ॥ ए० २ ॥ सासतोपर्वतनें हढशक्ति। सुक्ति निलोतिणकोजैभक्ति। पुष्फदंत महापदमसुठाम ए० ॥ ३ ॥ पृथ्वीपीठसुभद्रकैलाय। पातालमूल अकर्मकता स। सर्वकामकीजै गुणग्राम ए० ॥ ४ ॥ श्रीसेत्रुंजैनाइक वीसनाम। जपैजवैठाश्रपणैठांम। सेत्रुंजजात्रानोफलकहै। महावीरभगवंतइमकहै ॥५॥*॥दुहा॥*॥ सेत्रुंजोपहिलैअरे। असीजोयणपरमांण। पिहुलो मूलजं चपण। छ्वीसजोयणमांण॥ १ ॥ सित्तरजोयणजाणवो। बीजै अरैविशाल। बीसजोयणऊंचोकह्यो। सुऋवंदणात्रिकाल ॥२॥ साठजोयण तोजैअरै। पिहुलो तीरथराय। सोलजोयण ऊंचोसही ध्यानधरूं चितलाय ॥ ३ ॥ पचासजोयणपिहुलपण। चोथे अरै मझार। ऊंचो दसजोयण अचल। नितप्रणमेंनरनार ॥ ४ ॥ बारजोयणपंचम अरै। मूलतणो विशतार। दोजोयण ऊंचोअठै। सेत्रुंजतीरथसार ॥५॥ सातहाथछट्ठै अरै। पिहुलो परबतएह। ऊंचोहोस्यै सउधनुष। सासतोतीरथएह। ॥७॥*॥ ढाल ॥ जिन वरसुं मेरोमनलीणो ॥*॥ केवलन्यानी प्रमुखतीर्थंकर। अनंतसीधाइणठामरे। अनंतवली सीऊसै इणठामै। तिणकरूं नितपरणामरे। सेत्रुंजैसाधुअनंतासीधा। सीऊसीवलीय अनंतरे। जिणसेत्रुंजतीरथनहीभेट्यो। तेगरभावासकहंतरे। सेत्रुं० ॥२॥ फागुणसुदि आठमनै दिवसै। रिषभदेव सुखकाररे। रायणरूंषसमोसर्या स्वामी। पूरवनिनाणुंवाररे। से० ॥३॥ भरतपुत्रचैतीपूनमदिन। इणसेत्रुंजै गिरआयरे। पांचकोड्रिसुं पुंडरीकसीधा तिण पुंडरीक कहायरे से० ॥ ४ ॥ नमिविनमिराजाविद्या।

घर। बेबेकोडिसंघातरे। फागुणसुदिदशमीदिनसीधा। तिण प्रणमुंपरभातरे। से० ॥ ५ ॥ चैत्रमासवदि चउदसनेंदिन नमिपुत्रीचोसट्ठिरे। अणसणकरिसेत्रुंजै गिरउपर। एसहु सीधाएकट्ठरे। से०॥६॥ पोतरा प्रथमतीर्थंकरकेरा। द्राविड़ नै वारिखिल्लरे। कातीसुदि पूनमदिनसीधा। दशकोडिसुं सु निशिल्लरे से० ॥ ७ ॥ पांचे पांडवइणगिरसीधा। नवनारद रिषरायरे। संबप्रद्युननगया इहां सुगतें। आठेकरमखपायरे से० ॥८॥ नेमिविना तेवीसतीर्थंकर। समोसर्या गिरहंग रे। अजितशांति तीर्थंकरबेउं। रह्याचोमासोरंगरे। से०॥ ९ ॥ सहससाधुपरिवार संघातें। थावच्चासुतसाधरे। पांचसैं साधुसुं सेलगमुनिवर। सेत्रुंजै सिवसुखलाधरे से०॥१०॥ असं ख्यातामुनिसेत्रुंजैसीधा। भरतेसरनै पाटरे। राम अनै भर तादिक सीधा। मुक्तितणीएवाटरे। से०॥११॥ जालिमयाली नै उवयाली। प्रमुख साधुनीकोडिरे। साधु अनंतासेत्रुंजै सीधा। प्रणमुंबे करजोडिरे से० १२ ॥*॥ ढालचौपईनी ॥ *॥सेत्रुंजैनाकहुं सोलउद्धार। तेसुणिज्योसहुको सुविचार सुणतां आणंदअंगनमाय। जनमजनमनापातिकजाय ॥१॥ ऋषभदेव अयोध्यापुरी। समवसर्यास्वामी हितकरी। भ रतगयो वंदणनैकाज। ए उपदेसदियौ जिनराज ॥२॥ जग मांहैमोटा अरिहंतदेव। चौसठ इंद्रकरैजसुसेव। तेहथीमो टोसंघकहाय। जेहनें प्रणमै जिनवरराय ॥ ३ ॥ तेहथीमो टोसंघवीकह्यो। भरतसुणीनैमनगहगह्यो। भरतकहै ते किमपामियै। प्रभुकहै सेत्रुंजै यात्राकियै ॥ ४ ॥ भरतकहै संघवीपद मुज्झ। थे आपोजं अंगजतुज्झ। इंद्रैआण्याअ

व्रतवास । प्रभु आपै संघवीपदतास ॥ ५ ॥ इंद्रै तिणवेला
ततकाल । भरत सुभद्राबिहुंनैमाल । पहिरावीघरसंप्र
हिया । सखरसो नानारथ आपिया ॥ ६ ॥ रिषभदेवनीप्र
तिमावली । रतनतणीदीधीमनरली । भरतै गणधर घरतेडि
या । सांतिक पुष्टिक सहु तिहांकिया ॥ ७ ॥ कंकोत्रीमुंकी
सहुदेस । भरततेडायोसंघआसेस । आयोसंघ अयोध्यापुरी
प्रथमथकी रथजात्राकरी ॥८॥ संघ भगतकीधी अतिघणी ।
संघचलायो सेत्रुंजाभणी । गणधरबाहुबलकेवली । मुनि
वरकोडि साथेलीयावली ॥ ९ ॥ चक्रवर्त्तिनी सगलीरिद्ध ।
भरतैं साथेलीधीसिद्ध । हयगयरथपायक परवार । तेतो क
हतांनावैपार ॥ १० ॥ भरतेसर संघवीकहवाय । मारगचै
त्यउधरतोजाय । संघ आयो सेत्रुंजैपास । सहुनीपूगीमननी
आस ॥ ११ ॥ नयणे निरख्योसेत्रुंजराय । मणिमांणकमो
त्यांसुं बधाय । तिण ठामैं रह्यो महोछवकीयो । भरतें आ
णंद पुरवासियो ॥१२॥ संघसेत्रुंजा ऊपर चढ्यो । फरसं
तापातिक ऊडपड्यो । केवल न्यानी पगला तिहां । प्रण
म्यारायण रूंषहे जिहां ॥१३॥ केवलन्यानीसनालनिमित्त ।
ईशानेंद्र आणीसुपवित्त । नदीसेत्रुंजैसोहामणी । भरतैंदी
ठीकौतुकभणी ॥१४॥ गणधर देवतणें उपदेस । इंद्रै वलि
दीधो आदेस । श्रीआदिनाथ तणोदेहरो । भरत करायो
गिरिसेहरो ॥१५ ॥ सोनानो प्रासाद उत्तंग । रतन तणी
प्रतिमा मनरंग । भरतै श्रीआदीसरतणी । प्रतिमाथापी
सोहामणी ॥१६॥ मरुदेवानी प्रतिमावली । माहीपूनिंसघा
मीरली । माह्मीसुंदरीप्रमुखप्रासाद । भरतैथाप्यानवलेनाद

॥१८॥ इमअनेक प्रतिमाप्रासाद । भरतकराया गुरुसुप्रसाद भरततणोपहिलो उद्धार । सगलोही जाणे संसार ॥ १९ ॥ ॥ ॥ ढाल सिंधूडो आसावरी ॥ ॥ भरत तणेपाटै आठमै । दंडवीरज थयो रायोजी । भरत तणोपरे संघ कीयो । सेत्रुंजसंघवी कहायो जी । सेत्रुंजेउद्धारसांभलो । सोलमोटा श्रीकारोजी । असंख्यात वीचावलि । तेहनकहुं अधिकारोजी । से० ॥२॥ चैत्यकरायो रूपातणो । सोनानो विंवसारोजी । मूलगो विंवभंडारीयो । पश्चिमदिश तिणवा रोजी । से० ॥३॥ सेत्रुंजेनो जात्राकरी । सफलकियो अव तारोजी॥ दंडवीरज राजातणो । एवीजो उद्धारो जी । से० ॥४॥ सोसागरोपमवितिक्रम्या । दंडवीरजथी जिवारोजी । ईशानेंद्रकरावीयो । एत्रीजो उद्धारोजी । से० ॥५॥ चोथा देवलोकनो धणी । माहेंद्रनामउदारोजी । तिणसेत्रुंजेनो करावीयो । एचोथो उद्धारोजी । से० ॥६॥ पांचमा देवलो कनोधणी ब्रह्मेंद्र समकित धारोजी । तिणसेत्रुंजेनो करा वीयो । एपांचमो उद्धारोजी । से० ॥ ७ ॥ भुवनपती इंद्र नोकीयो । एछट्ठो उद्धारोजी । चक्रवर्त्तिसगरतणोकीयो । एसातमो उद्धारोजी । से० ॥ ८ ॥ अभिनंदनपासे सुण्यो । सेत्रुंजनो अधिकारो जी । व्यंतर इंद्र करावीयो । ए आठमो उद्धारो जी । से० ॥ ९ ॥ चंद्रप्रभु स्वामिनोपो तरो । चंद्रशेखरनाममल्हारोजी । चंद्रजसराय करा वीयो । ए नवमो उद्धारोजी । से० ॥ १० ॥ शांतिनाथनी सुणीदेशना । शांतिनाथ सुत सुविचारोजी । चक्रधर राय करावीयो । ए दशमो उद्धारोजी । से० ॥ ११ ॥ दशरथसुत

जगदीपतो। मुनि सुब्रत स्वामी वारो जी। श्रीरामचंद्र करावीयो। ए इग्यारमो उद्धारोजी। से० ॥१२॥ पांडव कहे अम्हे पापीया। किम छूटां मोटी मायोजी। कहे कुंती सेत्रुंजतणो। यात्र कीयां पाप जायोजी। से० ॥ १३॥ पांचे पांडव संघ करी। सेत्रुंज भेट्यो अपारोजी। काष्टचैत्य बिंबलेपना। ए बारमो उद्धारोजी। से०॥ १४ ॥ मम्माणी पाषाणनी। प्रतिमा सुंदरसरूपोजी। श्रीसेत्रुंजैनो संघकरी। थापी सकल सरूपोजी। से० ॥ १५ ॥ अष्टोत्तर सोवरसांगयां। विक्रमनृपथी जिवारो जी। पोर वाडजावड करावीयो। एतेरमो उद्धारो जी। से० ॥१६॥ संवत बारतिडोत्तरै। श्रीमालो सुविचारो जी। वाहडदे सुहतै करावीयो। ए चवदमो उद्धारोजी। से० ॥१७॥ संवततेरै इकोत्तरै। देसलहर अधिकारोजी। समरै साहकरावीयो। ए पंनरमो उद्धारो जी। से० ॥ १८ ॥ संवत पनर सत्यासीयै। वैसाख वदि सुभ वारोजी। करमैडोसी करावीयो। एसोलमो उद्धारो जी। से०॥१९॥ संप्रतिकालैसोलमो। ए वरतैछै उद्धारोजी। नितनितकीजै वंदना। पामीजै भवपारोजी। से० ॥२०॥ दुहा। वलिसेत्रुंज महातमकडु सांभलो जिमछै तेम। सूरिधनेसरइमकहै। महावीरकह्यो। एम ॥ १ ॥ जेहवोतेहवोदरसणी। सेत्रुंजै पुजनीक। भगवंतनो वेसवांदतां। लाभहुवैतहतीक ॥ २ ॥ श्रीसेत्रुंजाउपरै। चैत्यकरावै जेह। दलपरमाण समोलहै। पल्योपम सुखदेह ॥ ३ ॥ सेत्रुंज ऊपर देहरो। नवोनीपावै कोय जीर्णोद्धार करावतां। आठगुणो फलहोइ ॥ ४ ॥ सिर

ऊपरि गागरधरी । स्नात करावै नारि । चक्रवर्त्तिनी स्त्रीथई । सिवसुख पामेंसार ॥ ५ ॥ काती पूनिमसेत्रुंजे चढिनें करैं उपवास ।नारकीसौ सागर समो । करै करम नो नास ॥ ६ ॥ कातीपरवमोटो कह्यो । जिहां सीधा दश कोडि । ब्रह्म स्त्री बालकहत्या । पापथी नासैछोडि ॥७॥ सह सलाख स्रावक भणी । भोजन पुन्यविशेष । सेत्रुंज साधु पडिलाभतां । अधिको तेहथीदेष ॥ ८ ॥*॥ ढाल ५ ॥*॥ धन२ अयवंती सुकुमालनें एहनी ॥ सेत्रुंजगयां पाप छुटी यै । लीजै आलोयणएमोजी। तपजपकीजैं तिहां रही। तीर्थं कर कह्यो तेमोजी ॥ १ ॥ से० । जिणसोनानी चोरीकरी । ए आलोयणतासोजी । चैत्रीदिन सेत्रुंजचढी । एककरैं उप वासोजी ॥ २ ॥ से० । वस्तुतणी चोरीकरी । सात आंबिल सुधयायो जी । काती सातदिन तपकीयां । रतनहरण पाप जायोजी ॥ ३ ॥ से० । कांसी पीतल तांबा रजतनी । चोरी कीधी जेणे जी । सातदिवस पुरमढ़करै । तो छूटै गिरि एणेजी ॥ ४ ॥ से० । मोती प्रवाला मूंगीया । जिण चोर्‍या नरनारोजी । आंबिलकरि पूजाकरै । त्रिणटं क सुद्ध आचारोजी ॥ ५से० ॥ धान पाणी रसचोरीया । जे भेटै सिद्धखेत्रोजी । सेत्रुंजतलहटीसाधुनैं । पडिलाभैं सुध चित्तोजी ॥ ६ से० ॥ वस्त्राभरणजिणेंहर्‍या । तेछूटैइणमेलो जी । आदिनाथनी पूजाकरै । प्रहऊठीवड़वेलोजी ॥७से० ॥ देवगुरुनो धनजेहरै । तेसुद्धथायैएमोजी । अधिकोद्रव्य खरचै तिहां । पालपोषै बहुप्रेमोजी ॥८ से०॥ गायभैंसघो डामही । गजनोचोरणहारोजी । दे तेवस्तु तीरथैं । अरिहं

तध्यांनप्रकारीजी ॥ ९ से० ॥ पुस्तक देहरापारका । तिहां लिखे अपणो नामोजी । छूटैछमासीतपकीयां । सामायक तिणठामोजी ॥ १० से० ॥ कुंवारीपरिव्राजका । सधव अधव गुरु नारीजी । व्रतभांजे तिणनैंकह्यो । छमासीतपसारीजी ॥ ११से० ॥ गौ विप्रस्त्री बालकरिषी । एहनोघातक जेहोजी॥ प्रतिमा आगे आलोवतां । छूटैतपकरितेहोजी ॥ १२ से० ॥*॥ ढाल६ कुंमरभलै आवीयोए ॥एहनो ॥*॥ संप्रतिकालै सोलमोए । एवरतैछै उद्धार । सेतुंजयाला करूंए । सफलकरूं अवतार ॥ १ से० ॥ छहरी पालतांचा लीयेए । सेतुंजकेरीवाट । से० । पालीताणैं पहुंचीयेए । संघ मिलया बहुथाट ॥ २ से० ॥ ललितसरोवरपेखीयेए । वलिस त्तानीवाव । से० । तिहां विसरामोलीजीयेए । वहुनैचीतर आवि ॥ ३से० ॥ पालीताणैंपाजहुैए । चढीयेउठिपरभात से० । सेतुंजनदीयसोहामणीए । दूरथकीदेखंत ॥ ४ से० ॥ चढियै हिंगुलाजनैं हड्डैए । कलिकुंडनमीये पास । से० । वारीमांहिपैसीयैए । आणी अंगउल्लास ॥ ५ ॥से० । मरुदे वीटूंकमनोहरूए । गजचढी मरुदेवी माय । से० । शांति नाथ जिनसोलमोए । प्रणमीजैतसुपाय ।से०॥ ६ ॥ वंसपोव वाड्डै परगड्डैए । सोमजीसाहमलहार ।से० रूपजी संघवी । करावीयोए । चौमुखमूलउद्धार । से० ॥७॥ चौमुखप्रतिमा [illegible]चीयेए । भमतीमांहिभलाबिंब । पांचेपांडवपजिये ए । अदभुतआदिप्रलंब ।से० ॥८॥ खरतरवसहीपांतिसंए । बिंब जुहारूंअनेक ।से०। नेमनाथचवरीनमुंए । टालुंअलगउदे ग । से० ॥ ९ ॥ धरमदुवारमांहिनीसरूंए । कुगतिकरूं अ

तिदूर। से०। आबुं आदिनाथदेहरैए। करमकरं चकचूर से० ॥ १०॥ मूलनायक प्रणमुं मुदाए। आदिनाथ भगवंत से०। देवजुहारु देहरैए। भमतीमांहिभमंत से० ॥ ११ ॥ सेत्रुंजऊपरिकीजीयेए। पांचेठामसनाव। से०। कलश अठोत्तरसोकरुंए। निरमल नीरसुगाव। से०॥१२॥ प्रथम आदीसर आगलैए। पुंडरीक गणधार। से०। रायणतलपगला नमुंए। शांतिनाथ सुखकार। से० ॥ १३ ॥ रायणतलपगलानमुंए। चोमुखप्रतिमाच्यार। से०। बीजीभूमि बिंबावलीए पुंडरीकगणधार। से० ॥१४॥ सूरजकुंडनिहालीयैए। अति भलीउलकाझोल। से०। चेलणातलाई सिद्धसिलाए। अंगफरसुं उल्लोल ॥से०॥१५॥ आदिपुरपाजैउतरूंए। सिधवडलुं विसरांम। से०। चैत्यप्रवाडइणपरिकरीयै। सीधा वंछितकाम ॥ ॥से०॥१६॥ जात्राकरी सेत्रुंज तणीए। सफलकीयो अवतार से०। कुसलखेमसुं आवीयोए। संघसहूपरिवार ॥से०॥१७॥ सेत्रुंजरास सोहामणोए। सांभलज्योसहुकोइ। से०। घर बैठां भणैभावसुंए। तसुजात्राफलहोइ ॥से०॥१८॥ संवत सोल वयांसीयैए। सावणवदिसुखकार। से०। रासभण्यो सेत्रुंजतणोए। नगरनागोर मझार ॥ से०१९॥ गिरुवोगछ खरतरतणोए ॥जिनचंद्रोदसुरीस। से०। प्रथमसिष्य श्रीपूजनाए। सकलचंदसुजगीस ॥से०२०॥ ताससीसजगजाणीयैए। समैसुंदरउवझाय। से०। रासरच्योतिणरूवडोए। सुणतां आणंदथाय ॥ से० ॥ २१ ॥ ❋ ॥ इति श्रीसेत्रुंजरास संपूर्णम् ॥ ❋ ॥ ॥ ❋ ॥ ॥ ❋ ॥

॥*॥ अथ श्रीसम्मेतसिखरजीको रासलिख्यते ॥*॥ वांदी वीसजिनेसरू रचस्यु रास रसाल । तीरथ शिषरसमेतनी महिमा बड़ो विसाल ॥१॥ मोटो तीरथ महियलै । प्रगट्यो शिखर समेत । कोड़ाकोड़ी मुनिवरू सिद्धि गए इहखेत ॥२ तीरथ शिखरसमेतए । फरस्यां पापपुलाय । भविजनभेटो भावसुं । ज्युं सुखसंपद थाय ॥ ३ ॥ महिमा सिखरसमेत नी । कहिनसकै कविकोय । गुण अनंत भगवंतना । तिमए तीरथ होय ॥४॥ ढाल १॥ चौपईनी ॥*॥ गिरवर शिखर समोनहीकोय । एहनीमहिमासवजगहोय । वीसजिनेसर मुगतैगया । मुनिजन ध्यानधरीनै रह्या ॥१॥ प्रथम अयो ध्यानगरी भली । तिहां जितशत्रु नरेसर बली । विजया राणीनै सुतजाण । अजित कुमर सहुगुणनीषाण ॥ २ ॥ असुइंद्रादिक सेवा करै । इंद्राणी अतिउछवधरैं । तीर्थं करनी पदवी लही । अंतर अरिजिण साध्या सही ॥ ३ ॥ अनुक्रम इमभोगवतां भोग । पुन्यप्रसाद मिल्यो सहुजोग अवसरदैसंवत्सर दांन । संजमलीनो आपसुजान ॥ ४ ॥ कर्मपपावो पाम्यो ग्यान । केवलदर्शनलह्योप्रधान । विचरै पुहवी मंडल मांहि । भव्यजीव प्रतिबोधन ताहि ॥ ५ ॥ सिंह सेनादिक गणधरभया । पंचाणवै संख्या सहु थया । एकलाख मुनिवर परिवर्‍या । श्रावक श्रावकणी बहुकर्‍या ॥ ६ ॥ तीनं लाख वलि तीस हजार । साधवियां जाणो सुविचार । श्रावक सहस अठाणुं सही । दोय लाखसंख्या गह गही ॥ ७ ॥ पांच लाख पैंतालीस हजार । श्राव कणी संख्या सुविचार । बहुत्तर लाखपूरवनो आय । कंच

नवरण सरीरसुहाय ॥ ८ ॥ साठी च्यारसै धनुष सरीर । मानलह्यो प्रभुगुणगंभीर । गजलांछन प्रभुजीनो जाण । अमृतसमजसुमीठी वाण ॥९॥ अनुक्रम प्रभुजी सिखरसमेत । गिरवर पर आव्या निजहेत । सहस मुनिसरनें परिवार । मासखमण अणसण कर सार ॥ १० ॥ चैती सुदि पूनिमनें दिनें । मुक्तिगए प्रभु तीरथहूणें । भूचर खेचर किंनरसुरी इंद्रादिक सहु उछव करी ॥ ११ ॥ थाप्यो तीरथ मोटो मही । अट्ठाइ महोछवकियोसही । एतीरथनी जात्राकरै । ते भवियणअक्षयसुखलहै ॥१२॥ दुहा ॥ श्रीसंभव जिन राजजी । गएइहांनिर्वाण । शिखरसमेतसुहामणो । प्रगट्यौ तीरथ जाण ॥१॥ सुगुणसनेही साजनश्रीसीमंधरस्वाम एहनी ॥॥ सावत्थी नगरी भरी धनसंपदसहुथोक । जैतारीनृपराजकरै सुखियासबलोक। सेनाराणी मीठी वाणीगुणनी खाण । जेहनें सुत श्रीसंभवजनम्या सकल सुजाण ॥१॥ कंचनवरणसरीरमनोहर प्रभुनोजाण । लंछन अश्वतणो सोहै प्रभुनौ परधांन । साठलाख पूरवनो प्रभुनो आयुप्रमाण । धनुख च्यारसैउच्चपणै प्रभुदेहवखाण ॥२॥ एकसो दोय संख्यायें प्रभुनें गणधर होय । दोयलाखमुनिजेहनैगुणवरताजगजोय । तीन लाख श्रमणीवली ऊपर सहसछत्तीस । भूमंडल विचरै प्रभु श्रीसंभवजगदीस ॥३॥ तीन लाखवलि सहसतयाणु श्रावक लोक । षटलख सहस छत्तीसश्राविकाणी संख्यायोक । त्रिमुख यक्ष अरु दुरितादेवी सानिधकार । विचरंतां प्रभु सकलसंघमें जयजय कार ॥४॥ सहस श्रमण परिवारै प्रभुजी शिखर समेत । एकमास संलेषणकीनी

निज पटहेत। इण गिर ऊपर पाधो प्रभुजी पदनिरवांण।
तीरथमहिमा महियल मोटो पद्मय सुजाण ॥ ५ ॥ ※ ॥
दुहा ※ ॥ अभिनंदन जिनवंदिये। पायोपद निरवांण।
शिखरसमेत सुहामणो। भेटो तीर्थसुजांण ॥ १ ॥ सहस
श्रमणसु सुकसंजमधरो एहनो ॥ ※ ॥ नगरी अयोध्या
सुरपुरि समभली। संवरराजा सोहैमनरली। सिद्धार्थी
राणी तसुनंदए । अभिनंदन जिन प्रगट्याचंदए (उल्लालो)
चंदए सोवन वरणसोहै धनुष साढीतोनसै। सुंदर शरीर
प्रमाण द्युतिकर कपिलंछन तेनित वसै। पूर्वलाख पचास
आयु गणधरइकसो सोलए। तीनलाख मुनि छलाष आर्या
सहसविंसतसोलए ॥ १ ॥ [चाल] सहसअठयासी दोलख
भाहनी।संख्याचौलपसत्तावीसनी। श्रावकश्रयांरी संख्याजा
णए।नायकयक्षकालिकाठाणए (उल्लालो) ठाणए शिखरस
मेत ऊपरमासएकसंलेखणा। इकसहससाधू परवर्या प्रभु
मुक्ति पहुचे पेषणा। इमहीअयोध्या मेघनरवर देवी मात
सुमंगला। श्रीसुमति जिनवर भएनंदन सदाहो तसुमंगला
(चाल) सोवनवर्णधनुपतमुतोनसै।लंछनक्रौंचसोहैसुभगेहसै
पूरवलाखपच्यासो आऊए। इकसौ गणधरगुणगणभाऊए
(उल्लालो) भाऊए मुनि तिणलाख सोहैसहसवीस प्रमाणए
पचसहसतीस हजारसाध्वी श्रावक दोय लक्षजाणए। संख्या
इकसौ सहस ऊपर श्रावकाइम आनीयै। पणलाखसोहे
सहसहुं वदमहाकालीमानीये। श्रीशिखर ऊपर जातसंख्या
सहससाधुसुंसंगए।करमासकौसंलेखणाप्रभुमुक्तिपुहता संगए
(चाल) इमकोसंबी नगरीतातए। धरनृपतात सुसीमामातए

पद्मप्रभुतसु अंगजनाथए। लंछनकमलतणो सुभव्हाथए। (उल्लालो) हाथएधनुखप्रमाणपूराअढाईसैतनुकह्यो। तीन लाख पूरबथितकहावैएकसोगणधरलह्यो। लखतीनतीसह जारसाधू बीसस्हसलखच्यारए। साधवीदोयलख सहसठि हंतर श्रावकसंख्यासारए। (चाल) पांचलाख बलि पांच हजारए। श्रावकण्यांरी संख्यासारए। कुसुमदेवस्यामादे बीकहो। लालवरण तनुसोहैप्रभुसह्यो। (उल्लालो) सोहए सिखरसमेतऊपर आठसैतिणमुनिवरा। करमाससंलेखन प्रभुनी सेवकरहैसुरवरा। श्रीपद्मप्रभुजी मुक्तिपहुता। गिरशिखर महिमाभई। तसुचरणपंकज वालवंदै हृदय आणंद गहगही ॥ दुहा ॥ श्रीसुपासजिणंदना। पदपंकज आराम। भविजन भमरसुसेवतां। पामें बंछितकाम ॥१॥ ॥ श्रीसीमंधर साहिबा ए चाल ॥ ॥ नगर वणारसी सोभता। राजातात प्रतिष्ठलालरे। देवीपृथवीमातजी। स्व स्तिकलंछनसिष्टलालरे ॥१॥ श्रीसुपार्श्वजिणंदजी। बीसपूर बलख आयुलालरे। धनुषदोयसदेहनो। कंचनवरणसुहाय लालरे ॥२॥श्री०॥ पंचाणवैगणधर कह्या। साधूतिणलाख होयलालरे। च्यारलाखतीस ऊपरै। सहससाधवियां जो यलालरे ॥ ३ ॥श्री०॥ सहससतावनलच्छनो। श्रावकसंख्या थायलालरे। च्यारलाखवलीत्राणवै। सहसश्रावकणीभा यलालरे ॥ ४ ॥ श्री०॥ मातंगयच्छसांतासुरी। पांचसै मुनि परवारलालरे। करिअणसणसुगतैगया। नामलियांनिस्तार लालरे ॥ ५ ॥ श्रीसु०॥ नगर चंद्रपुरइणपरै। राजातात महेसलालरे। देवी मातालच्छणा। सुतचंद्रा प्रभुवेषला

लरे ॥ ६ ॥ श्रीचंद्राप्रभ वंदिये । चंद्रवरणतनुजेहलाल रे । लंछनचंद्रतणोभलो । धनुषदोढसै देहलालरे ॥ ७ ॥ श्रीचं० ॥ भविककमल प्रतिबोधता । सेवैसुरनरवृन्दलालरे । दसलाखपूरव आऊषो । तेणवैगणधर वृन्दलालरे ॥ ८ ॥ श्रीचं०॥ दोयलखसंहसपचाणवे । मुनिश्रमणी तीनलखला लरे ।असीसहस संख्याकही श्रावकवलि दोयलक्षलालरे ॥ ९ ॥श्रीचं०॥ लाखपचासऊपरवली । श्राविकाचउलक्षधार लालरे । सहसइकाणवेऊपरै । प्रभुजीनोपरिवारलालरे ॥ १० ॥ श्रीचं० ॥ विजयदेव भृकुटीसुरी । सहससाधुपरवार लालरे । संलेखनइकमासनी । पुहतामुक्तिमझारलालरे ॥ ११ ॥ श्रीचं० ॥ दुहा ॥ जय श्रीसुविधजिनेसरू । जगपति दीनदयाल । समेतसिखरमंगतेगया । भविजनकेप्रतिपाल ॥ ढाल ॥३॥ श्रीविमलाचलसिरतिलोएहनी ॥ नयरकाकं दीनरपति । एमपितासुग्रीव । देवीरामामातासुत । भएसुवि धसुभजीव ॥१॥ रजतवरणसमतनुसत । धनुष एकपरिमांण दोय लाख पूरबकह्यो । प्रभुनो आयुसुजांण ॥२॥ अठ्यासी संख्याभए । गणधरपरम प्रधान । लखदो मुनि विंशतिसह स । इकलखश्रमणीजांण ॥४॥ दोयलक्ष श्रावककह्या । अरु गुणतीसहजार । एकत्तरचौलखसहस । श्रावकणीसुविचार ॥५॥ सुरीसुतारा सुरअजित । श्रीसंघसानिधकार । सहससा धुपरवारसुं । आएसिखरमुझार ॥ ६ ॥ माससंलेखणकार प्रभु । मुक्तिगएइहठोर । तीरथमहिमामहियलै । प्रगटीच्या रुंओर ॥ ७ ॥ इमहीजशीतलनाथनो । शिवसुखज्यो अधि कार । भद्दिलपुरदृढरथपिता । मातनंदासुखकार ॥ ८ ॥

